श्रूयते च यथा—

चितिकां दीपितां पश्य फटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते' ॥ १२९ ॥

अरिमर्दनः प्राह—'कथमेतत्।' रक्ताक्षः कथयति—

## कथा ९। 5

अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्वतः सदैव निष्फलः कालोऽतिवर्तते। अथैकस्मिन्दिवसे स ब्राह्मण उष्णकालावसाने घर्मार्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तोऽनतिदूरे वल्मीकोपरि प्रसारितं बृहत्फटायुक्तं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास—'नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता। 10 तेनेदं मे कृषिकर्म विफलीभवति। तदस्या अहं पूजामद्य करिष्यामि।' इत्यवधार्य कुतोऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिकमुपागम्योवाच—'भोः क्षेत्रपाल, मयैतावन्तं कालं न ज्ञातं यत्त्वमत्र वससि। तेन पूजा न कृता। तत्सांप्रतं क्षमस्व' इति। एवमुक्त्वा दुग्धं च निवेद्य गृहाभिमुखं प्रायात्। अथ प्रातर्यावदागत्य पश्यति, 15 तावद्दीनारमेकं शरावे दृष्टवान्। एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति। एकैकं च दीनारं गृह्णाति। अथैकस्मिन्दिवसे वल्मीके क्षीरनयनाय पुत्रं निरूप्य ब्राह्मणो ग्रामान्तरं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकं च दृष्ट्वा गृहीत्वा च चिन्तितवान्—'नूनं सौवर्णदी- 20 नारपूर्णोऽयं वल्मीकः। तदेनं हत्वा सर्वमेकवारं ग्रहीष्यामि।' इत्येवं संप्रधार्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताडितः। ततः कथमपि दैववशादमुक्तजीवित एव रोषात्तमेव तीव्रविषदशनैस्तथादशत्, यथा सद्यः पञ्चत्वमुपागतः। स्वजनैश्च नातिदूरे क्षेत्रस्य काष्ठसंचयैः संस्कृतः। अथ द्वितीयदिने तस्य पिता 25 समायातः। स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान्। अब्रवीच्च—

'भूतान्यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा' ॥ १३० ॥

पुरुषैरुक्तम्—'कथमेतत् ।' ब्राह्मणः कथयति—

## कथा ६ ।

अस्ति कस्मिंश्चिदधिष्ठाने चित्ररथो नाम राजा । तस्य योधैः सुरक्ष्यमाणं पद्मसरो नाम सरस्तिष्ठति । तत्र च प्रभूता जाम्बूनदमया हंसास्तिष्ठन्ति । षण्मासे षण्मासे पिच्छमेकैकं परित्यजन्ति । अथ तत्र सरसि सौवर्णो बृहत्पक्षी समायातः । तैश्चोक्तः—'अस्माकं मध्ये त्वया न वस्तव्यम्, येन कारणेनास्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत्सरः ।' एवं च किं बहुना परस्परं द्वैधमुत्पन्नम् । स च राज्ञः शरणं गतोऽब्रवीत्—'देव, एते पक्षिण एवं वदन्ति, यदस्माकं राजा किं करिष्यति । न कस्याप्यावासं दद्मः । मया चोक्तम्—न शोभनं युष्माभिरभिहितम् । अहं गत्वा राज्ञे निवेदयिष्यामि । एवं स्थिते देवः प्रमाणम् ।' ततो राजा भृत्यानब्रवीत्—'भो भोः, गच्छत । सर्वान्पक्षिणो गतासून्कृत्वा शीघ्रमानयत ।' राजादेशानन्तरमेव प्रचेलुस्ते । अथ लगुडहस्तान्राजपुरुषान्दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तम्—'भोः स्वजनाः, न शोभनमापतितम् । ततः सर्वैरेकमतीभूय शीघ्रमुत्पतितव्यम् ।' तैश्च तथानुष्ठितम् । अतोऽहं ब्रवीमि—'भूतान्यो नानुगृह्णाति' इति ॥ इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा तारस्वरेण सर्पमस्तौत् । तदा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच—'त्वं लोभादत्रागतः पुत्रशोकमपि विहाय । अतः परं तव मम च प्रीतिर्नोचिता । तव पुत्रेण यौवनोन्मदेनाहं ताडितः । मया स दष्टः । कथं मया लगुडप्रहारो विस्मर्तव्यः, त्वया च पुत्रशोकदुःखं कथं विस्मर्तव्यम् ।' इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा 'अतः परं पुनस्त्वया नागन्तव्यम्' इति पुनरुक्त्वा विवरान्तर्गतः । ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन्स्वगृहमागतः । अतोऽहं ब्रवीमि—'चितिकां दीपितां पश्य' इति ॥ तदस्मिन्हते यत्नादेव राज्यमकण्टकं भवतो भवति ।'

तस्यैतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ—'भद्र, त्वं तु किं मन्यसे ।' सोऽब्रवीत्—'देव, निर्दयमेतत्, यदनेनाभिहितम् । यत्कारणं शरणागतो न वध्यते । सुष्ठु खल्विदमाख्यातम् ।

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः' ॥ १३१ ॥

अरिमर्दनोऽब्रवीत्—'कथमेतत् ।' क्रूराक्षः कथयति—

## कथा ७ ।

कश्चित्क्षुद्रसमाचारः प्राणिनां कालसन्निभः । 5
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥ १३२ ॥

नैव कश्चित्सुहृत्तस्य न संबन्धी न बान्धवः ।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा ॥ १३३ ॥

अथवा ।

ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः । 10
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १३४ ॥

स पञ्जरकमादाय पाशं च लगुडं तथा ।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः ॥ १३५ ॥

अन्येद्युर्भ्रमतस्तस्य वने कापि कपोतिका ।
जाता हस्तगता तां स प्राक्षिपत्पञ्जरान्तरे ॥ १३६ ॥ 15

अथ कृष्णा दिशः सर्वा वनस्थस्याभवन्घनैः ।
वातवृष्टिश्च महती क्षयकाल इवाभवत् ॥ १३७ ॥

ततः संत्रस्तहृदयः कम्पमानो मुहुर्मुहुः ।
अन्वेषयन्परित्राणमाससाद वनस्पतिम् ॥ १३८ ॥

मुहूर्तं पश्यते यावद्वियद्विमलतारकम् । 20
प्राप्य वृक्षं वदत्येव योऽत्र तिष्ठति कश्चन ॥ १३९ ॥

तस्याहं शरणं प्राप्तः स परित्रातु मामिति ।
शीतेन भिद्यमानं च क्षुधया गतचेतसम् ॥ १४० ॥

अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः ।
भार्याविरहितस्तिष्ठन्विललाप सुदुःखितः ॥ १४१ ॥ 25

वातवर्षो महानासीन्न चागच्छति मे प्रिया ।
तया विरहितं ह्येतच्छून्यमद्य गृहं मम ॥ १४२ ॥

पतिव्रता पतिप्राणा पत्युः प्रियहिते रता ।
यस्य स्यादीदृशी भार्या धन्यः स पुरुषो भुवि ॥ १४३ ॥

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम् ॥ १४४ ॥
पञ्जरस्था ततः श्रुत्वा भर्तुर्दुःखान्वितं वचः ।
कपोतिका सुसंतुष्टा वाक्यं चेदमथाह सा ॥ १४५ ॥
5 न सा स्त्रीत्यभिमन्तव्या यस्यां भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ १४६ ॥
दावाग्निना विदग्धेव सपुष्पस्तबका लता ।
भस्मीभवतु सा नारी यस्यां भर्ता न तुष्यति ॥ १४७ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
10 अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ १४८ ॥

पुनश्चाब्रवीत्—

श्रृणुष्वावहितः कान्त यत्ते वक्ष्याम्यहं हितम् ।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १४९ ॥
एष शाकुनिकः शेते तवावासं समाश्रितः ।
15 शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥ १५० ॥

श्रूयते च ।

यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत् ।
तस्यासौ दुष्कृतं दत्त्वा सुकृतं चापकर्षति ॥ १५१ ॥
मा चास्मै त्वं कृथा द्वेषं बद्धानेनेति मत्प्रिया ।
20 स्वकृतैरेव बद्धाहं प्राक्तनैः कर्मबन्धनैः ॥ १५२ ॥
दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ १५३ ॥
तस्मात्त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम् ।
धर्मे मनः समाधाय पूजयैनं यथाविधि ॥ १५४ ॥
25 तस्यास्तद्वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥ १५५ ॥
भद्र सुस्वागतं तेऽस्तु ब्रूहि किं करवाणि ते ।
संतापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥ १५६ ॥
तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गमम् ।
30 कपोत खलु शीतं मे हिमत्राणं विधीयताम् ॥ १५७ ॥

स गत्वाङ्गारकं नीत्वा पातयामास पावकम् ।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत् ॥ १५८ ॥
सुसंदीप्तं ततः कृत्वा तमाह शरणागतम् ।
संतापयस्व विश्रब्धं स्वगात्राण्यत्र निर्भयः ।
न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधम् ॥ १५९ ॥ 5
सहस्रं भरते कश्चिच्छतमन्यो दशापरः ।
मम त्वकृतपुण्यस्य क्षुद्रस्यात्मापि दुर्भरः ॥ १६० ॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ॥ १६१ ॥
तत्तथा साधयाम्येतच्छरीरं दुःखजीवितम् । 10
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे ॥ १६२ ॥
स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ १६३ ॥
एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं संपरिक्रम्य प्रविवेश स्ववेश्मवत् ॥ १६४ ॥ 15
ततस्तं लुब्धको दृष्ट्वा कृपया पीडितो भृशम् ।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥ १६५ ॥
यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥ १६६ ॥
सोऽहं पापमतिश्चैव पापकर्मरतः सदा । 20
पतिष्यामि महाघोरे नरके नात्र संशयः ॥ १६७ ॥
नूनं मम नृशंसस्य प्रत्यादर्शः सुदर्शितः ।
प्रयच्छता स्वमांसानि कपोतेन महात्मना ॥ १६८ ॥
अद्य प्रभृति देहं स्वं सर्वभोगविवर्जितम् ।
तोयं स्वल्पं यथा ग्रीष्मे शोषयिष्याम्यहं पुनः ॥ १६९ ॥ 25
शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुविधैश्चरिष्ये धर्ममुत्तमम् ॥ १७० ॥
ततो यष्टिं शलाकां च जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां कपोतीं च मुमोच ताम् ॥ १७१ ॥

लुब्धकेन ततो मुक्ता दृष्ट्वाग्नौ पतितं पतिम् ।
कपोती विललापार्ता शोकसंतप्तमानसा ॥ १७२ ॥
न कार्यमद्य मे नाथ जीवितेन त्वया विना ।
दीनायाः पतिहीनायाः किं नार्या जीविते फलम् ॥ १७३ ॥
5 मनोदर्पस्त्वहंकारः कुलपूजा च बन्धुषु ।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति ॥ १७४ ॥
एवं विलप्य बहुशः कृपणं भृशदुःखिता ।
पतिव्रता सुसंदीप्तं तमेवाग्निं विवेश सा ॥ १७५ ॥
ततो दिव्याम्बरधरा दिव्याभरणभूषिता ।
10 भर्तारं सा विमानस्थं ददर्श स्वं कपोतिका ॥ १७६ ॥
सोऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत् ।
अहो मामनुगच्छन्त्या कृतं साधु शुभे त्वया ॥ १७७ ॥
तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥ १७८ ॥
15 कपोतदेवः सूर्यास्ते प्रत्यहं सुखमन्वभूत् ।
कपोतदेहवत्सासीत्प्राक्पुण्यप्रभवं हि तत् ॥ १७९ ॥
हर्षाविष्टस्ततो व्याधो विवेश च वनं घनम् ।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान्भृशम् ॥ १८० ॥
तत्र दावानलं दृष्ट्वा विवेश विरताशयः ।
20 निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥ १८१ ॥

अतोऽहं ब्रवीमि—'श्रूयते हि कपोतेन' इति ॥

तच्छ्रुत्वारिमर्दनो दीप्ताक्षं पृष्टवान्—'एवमवस्थिते किं भवान्मन्यते ।' सोऽब्रवीत्—'देव, न हन्तव्य एवायम् । यतः ।

या ममोद्विजते नित्यं सा मामद्यावगूहते ।
25 प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत् ॥ १८२ ॥

चौरेण चाप्युक्तम्—

हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते' ॥ १८३ ॥

अरिमर्दनः पृष्टवान्—'का च नावगूहते । कश्चायं चौर इति विस्तरतः श्रोतुमिच्छामि ।' दीप्ताक्षः कथयति—

## कथा ८ ।

अस्ति कस्मिंचिदधिष्ठाने कामातुरो नाम वृद्धवणिक् । तेन च कामोपहतचेतसा मृतभार्येण काचिन्निर्धनवणिक्सुता प्रभूतं धनं दत्त्वोद्वाहिता । अथ सा दुःखाभिभूता तं वृद्धवणिजं द्रष्टुमपि न शशाक । युक्तं चैतत् । 5

श्वेतं पदं शिरसि यत्तु शिरोरुहाणां
स्थानं परं परिभवस्य तदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १८४ ॥

तथा च । 10

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता
दृष्टिर्भ्राम्यति रूपमप्युपहतं वक्त्रं च लालायते ।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
धिक्कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ १८५ ॥

अथ कदाचित्सा तेन सहैकशयने पराङ्मुखी यावत्तिष्ठति, तावद्गृहे 15 चौरः प्रविष्टः । सापि तं चौरं दृष्ट्वा भयव्याकुलिता वृद्धमपि तं पतिं गाढं समालिलिङ्ग । सोऽपि विस्मयात्पुलकाङ्कितसर्वगात्रश्चिन्तयामास—'अहो, किमेषा मामद्यावगूहते ।' यावन्निपुणतया पश्यति, तावद्गृहकोणैकदेशे चौरं दृष्ट्वा व्यचिन्तयत्—'नूनमेषास्य भयान्मामालिङ्गति' इति ज्ञात्वा तं चौरमाह— 20

'या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियकारक भद्रं ते यन्ममास्ति हरस्व तत्' ॥ १८६ ॥

तच्छ्रुत्वा चौरोऽप्याह—

'हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते' ॥ १८७ ॥ 25

तस्माच्चौरस्याप्युपकारिणः श्रेयश्चिन्त्यते, किं पुनर्न शरणागतस्य । अपि चायं तैर्विप्रकृतोऽस्माकमेव पुष्टये भविष्यति तदीयरन्ध्रदर्शनाय चेति । अनेन कारणेनायमवध्यः' इति ।

एतदाकर्ण्यारिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ—'भद्र, सांप्रतमेवं स्थिते किं कर्तव्यम् ।' सोऽब्रवीत्—'देव, अवध्योऽयम् । यतः । 30

'शत्रवोऽपि हितायैव विवदन्तः परस्परम् ।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम्' ॥ १८८ ॥

अरिमर्दनः प्राह—'कथमेतत् ।' वक्रनासः कथयति—

## कथा ९ ।

5 अस्ति कस्मिंश्चिदधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः प्रतिग्रहधनः सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालंकारताम्बूलादिभोगपरिवर्जितः प्ररूढकेशश्मश्रुनखरोमोपचितः शीतोष्णवातवर्षादिभिः परिशोषितशरीरः । तस्य च केनापि यजमानेनानुकम्पया शिशुगोयुगं दत्तम् । ब्राह्मणेन च बालभावादारभ्य याचितघृततैलयवसादिभिः संवर्ध्य सु-
10 पुष्टं कृतम् । तच्च दृष्ट्वा सहसैव कश्चिच्चौरश्चिन्तितवान्—'अहमस्य ब्राह्मणस्य गोयुगमिदमपहरिष्यामि ।' इति निश्चित्य निशायां बन्धनपाशं गृहीत्वा यावत्प्रस्थितः, तावदर्धमार्गे प्रविरलतीक्ष्णदन्तपङ्क्तिरुन्नतनासावंशो प्रकटरक्तान्तनयनोपचितस्नायुसंततिर्नतगात्रः शुष्ककपोलः सुहुतहुतवहपिङ्गलश्मश्रुकेशशरीरः कश्चिद्दृष्टः । दृष्ट्वा च तं तीव्रभय-
15 त्रस्तोऽपि चौरोऽब्रवीत्—'को भवान्' इति । स आह—'सत्यवचनोऽहं ब्रह्मराक्षसः । भवानप्यात्मानं निवेदयतु ।' सोऽब्रवीत्—'अहं क्रूरकर्मा चौरः । दरिद्रब्राह्मणस्य गोयुगं हर्तुं प्रस्थितोऽस्मि ।' अथ जातप्रत्ययो राक्षसोऽब्रवीत्—'भद्र, षष्ठाह्नकालिकोऽहम् । अतस्तमेव ब्राह्मणमद्य भक्षयिष्यामि । तत्सुन्दरमिदम् । एककार्यावेवावाम् ।'
20 अथ तौ तत्र गत्वैकान्ते कालमन्वेषयन्तौ स्थितौ । प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरोऽब्रवीत्—'भद्र, नैष न्यायः, यतो गोयुगे मयापहृते पश्चात्त्वमेनं ब्राह्मणं भक्षय ।' सोऽब्रवीत्—'कदाचिदयं ब्राह्मणो गोशब्देन बुध्येत, तदानर्थकोऽयं ममारम्भः स्यात् ।' चौरोऽप्यब्रवीत्—'तवापि यदि भक्षणायोपस्थितस्यान्तर
25 एकोऽप्यन्तरायः स्यात्, तदाहमपि न शक्नोमि गोयुगमपहर्तुम् । अतः प्रथमं मयापहृते गोयुगे पश्चात्त्वया ब्राह्मणो भक्षयितव्यः ।' इत्थं चाहमहमिकया तयोर्विवदतोः समुत्पन्ने द्वैधे प्रतिरववशाद्ब्राह्मणो जजागार । अथ तं चौरोऽब्रवीत्—'ब्राह्मण, त्वामेवायं राक्षसो भक्ष-

यितुमिच्छति ।' राक्षसोऽप्याह—'ब्राह्मण, चौरोऽयम् । गोयुगं तेऽपहर्तुमिच्छति ।' एवं श्रुत्वोत्थाय ब्राह्मणः सावधानो भूत्वेष्टदेवतामन्त्राध्यायेनात्मानं राक्षसादुद्गूर्णलगुडेन चौराद्गोयुगं ररक्ष । अतोऽहं ब्रवीमि—'शत्रवोऽपि हितायैव' इति ॥

अथ तस्य वचनमवधार्यारिमर्दनः पुनरपि प्राकारकर्णमपृच्छत्— 5
'कथय । किमत्र मन्यते भवान् ।' सोऽब्रवीत्—'देव, अवध्य एवायम्, यतो रक्षितेनानेन कदाचित्परस्परप्रीत्या कालः सुखेन गच्छति। उक्तं च—

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः ।
त एव निधनं यान्ति वल्मीकोदरसर्पवत्' ॥ १८९ ॥ 10

अरिमर्दनोऽब्रवीत्—'कथमेतत् ।' प्राकारकर्णः कथयति—

## कथा १० ।

अस्ति कस्मिंश्चिन्नगरे देवशक्तिर्नाम राजा । तस्य च पुत्रो जठरवल्मीकाश्रयेणोरगेण प्रतिदिनं प्रत्यङ्गं क्षीयते । अनेकोपचारैः सद्वैद्यैः सच्छास्त्रोपदिष्टौषधयुक्त्यापि चिकित्स्यमानो न स्वास्थ्यमाप्नोति । 15
अथासौ राजपुत्रो निर्वेदाद्देशान्तरं गतः । कस्मिंश्चिन्नगरे भिक्षाटनं कृत्वा महति देवालये कालं यापयति । अथ तत्र नगरे बलिर्नाम राजास्ते । तस्य च द्वे दुहितरौ यौवनस्थे तिष्ठतः । ते च प्रतिदिवसमादित्योदये पितुः पादान्तिकमागत्य नमस्कारं चक्रतुः । तत्र चैकाब्रवीत्—विजयस्व महाराज, यस्य प्रसादात्सर्वं सुखं लभ्यते ।' 20
द्वितीया तु 'विहितं भुङ्क्ष्व महाराज' इति ब्रवीति । तच्छ्रुत्वा प्रकुपितो राजाब्रवीत्—'भो मन्त्रिन्, एनां दुष्टभाषिणीं कुमारिकां कस्यचिद्वैदेशिकस्य प्रयच्छत। येन निजविहितमियमेव भुङ्क्ते ।' अथ 'तथा' इति प्रतिपद्याल्पपरिवारा सा कुमारिका मन्त्रिभिस्तस्य देवकुलाश्रितराजपुत्रस्य प्रतिपादिता । सापि प्रहृष्टमानसा तं पतिं देव- 25
वत्प्रतिपद्यादाय चान्यविषयं गता । ततः कस्मिंश्चिद्दूरतरनगरप्रदेशे तडागतटे राजपुत्रमावासरक्षार्थे निरूप्य, स्वयं च घृततैललवणतण्डुलादिक्रयनिमित्तं सपरिवारा गता । कृत्वा च क्रयविक्रयं यावदागच्छति, तावत्स राजपुत्रो वल्मीकोपरिकृतमूर्धा प्रसुप्तः । तस्य च मुखाद्भुजगः फणां निष्क्राम्य वायुमश्नाति । तत्रैव च वल्मीकेऽपरः 30

सर्पो निष्क्रम्य तथैवासीत् । अथ तयोः परस्परदर्शनेन क्रोधसं-
रक्तलोचनयोर्मध्याद्वल्मीकस्थेन सर्पेणोक्तम्—भो भो दुरात्मन्, कथं
सुन्दरसर्वाङ्गं राजपुत्रमित्थं कदर्थयसि ।' मुखस्थोऽहिरब्रवीत्—
'भो भोः, त्वयापि दुरात्मनास्य वल्मीकस्य मध्ये कथमिदं दूषितं
5 हाटकपूर्णं कलशयुगलम् ।' इत्येवं परस्परस्य मर्माण्युद्घाटितवन्तौ ।
पुनर्वल्मीकस्थोऽहिरब्रवीत्—'भो दुरात्मन्, भेषजमिदं ते किं
कोऽपि न जानाति, यज्जीर्णोत्कालितकञ्जिकाराजिकापानेन भवान्वि-
नाशमुपयाति ।' अथोदरस्थोऽहिरब्रवीत्—'तवाप्येतद्भेषजं किं क-
श्चिदपि न वेत्ति, यदुष्णतैलेन वा महोष्णोदकेन तव विनाशः स्यात्'
10 इति । एवं च सा राजकन्या विटपान्तरिता तयोः परस्परालापान्
मर्ममयानाकर्ण्य तथैवानुष्ठितवती । विधायाव्यङ्गं नीरोगं भर्तारं
निधिं च परममासाद्य स्वदेशाभिमुखं प्रायात् । पितृमातृस्वजनैः प्रति-
पूजिता विहितोपभोगं प्राप्य सुखेनावस्थिता । अतोऽहं ब्रवीमि—
'परस्परस्य मर्माणि' इति ॥ तच्च श्रुत्वा स्वयमरिमर्दनोऽप्येवं समर्थि-
15 तवान् । तथा चानुष्ठितं दृष्ट्वान्तर्लीनं विहस्य रक्ताक्षः पुनरब्रवीत्—
'कष्टम् । विनाशितोऽयं भवद्भिरन्यायेन स्वामी । उक्तं च—

अपूज्या यत्र पूज्यन्ते पूज्यानां तु विमानना ।
त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम् ॥ १९० ॥

तथा च ।

20 प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति ।
रथकारः स्वकां भार्यां सजारां शिरसावहत् ॥ १९१ ॥

मन्त्रिणः प्राहुः—'कथमेतत् ।' रक्ताक्षः कथयति—

## कथा ११ ।

अस्ति कस्मिंश्चिदधिष्ठाने वीरधरो नाम रथकारः । तस्य भार्या
25 कामदमिनी । सा च पुंश्चली जनापवादसंयुक्ता । सोऽपि तस्याः
परीक्षणार्थं व्यचिन्तयत्—'अथ मयास्याः परीक्षणं कर्तव्यम् ।
उक्तं च यतः—

यदि स्यात्पावकः शीतः प्रोष्णो वा शशलाञ्छनः ।
स्त्रीणां तदा सतीत्वं स्याद्यदि स्याद्दुर्जनो हितः ॥ १९२ ॥

जानामि चैनां लोकवचनादसतीम् । उक्तं च—

यच्च वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतम् ।
तत्सर्वं वेत्ति लोकोऽयं यत्स्याद्ब्रह्माण्डमध्यगम्' ॥ १९३ ॥

एवं संप्रधार्य भार्यामवोचत्—प्रिये, प्रभातेऽहं ग्रामान्तरं यास्यामि । तत्र कतिचिद्दिनानि लगिष्यन्ति । तत्त्वया किमपि पाथेयं मम योग्यं 5 विधेयम् ।' सापि तद्वचनं श्रुत्वा हर्षितचित्तौत्सुक्यात्सर्वकार्याणि संत्यज्य सिद्धमन्नं घृतशर्कराप्रायमकरोत् । अथवा साध्विदमुच्यते—

दुर्दिवसे घनतिमिरे वर्षति जलदे महाटवीप्रभृतौ ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ १९४ ॥

अथासौ प्रत्यूष उत्थाय स्वगृहान्निर्गतः । सापि तं प्रस्थितं विज्ञाय 10 प्रहसितवदनाङ्गसंस्कारं कुर्वाणा कथंचित्तद्दिवसमत्यवाहयत् । अथ पूर्वपरिचितविटगृहे गत्वा तं प्रत्युक्तवती—'स दुरात्मा मे पति-र्ग्रामान्तरं गतः । तत्त्वयास्मद्गृहे प्रसुप्ते जने समागन्तव्यम् ।' तथा-नुष्ठिते स रथकारोऽरण्ये दिनमतिवाह्य प्रदोषे स्वगृहेऽपरद्वारेण प्र-विश्य शय्याधस्तले निभृतो भूत्वा स्थितः । एतस्मिन्नन्तरे स देव- 15 दत्तः समागत्य तत्र शयन उपविष्टः । तं दृष्ट्वा रोषाविष्टचित्तो रथ-कारो व्यचिन्तयत्—'किमेनमुत्थाय हन्मि, अथवा हेलयैव प्रसुप्तौ द्वावप्येतौ व्यापादयामि । परं पश्यामि तावदस्याश्चेष्टितम् । शृ-णोमि चानेन सहालापान् ।' अत्रान्तरे सा गृहद्वारं निभृतं विधाय शयनतलमारूढा । अथ तस्यास्तत्रारोहन्त्या रथकारशरीरे पादो वि- 20 लग्नः । ततः सा व्यचिन्तयत्—'नूनमेतेन दुरात्मना रथकारेण म-त्परीक्षणार्थं भाव्यम् । ततः स्त्रीचरित्रविज्ञानं किमपि करोमि । एवं तस्याश्चिन्तयन्त्याः स देवदत्तः स्पर्शोत्सुको बभूव । अथ तया कृता-ञ्जलिपुटयाभिहितम्—'भो महानुभाव, न मे शरीरं त्वया स्पर्शनी-यम्, यतोऽहं पतिव्रता महासती च । न चेच्छापं दत्त्वा त्वां भस्म- 25 सात्करिष्यामि ।' स आह—'यद्येवं तर्हि त्वया किमहमाहूतः ।' सा-ब्रवीत्—'भोः, शृणुष्वैकाग्रमनाः । अहमद्य प्रत्यूषे देवतादर्शनार्थं चण्डिकायतनं गता । तत्राकस्मात्खे वाणी संजाता—पुत्रि, किं क-रोमि । भक्तासि मे त्वम् । परं षण्मासाभ्यन्तरे विधिनियोगाद्विधवा भवि-

ष्यसि। ततो मयाभिहितम्—भगवति, यथा त्वमापदं वेत्सि, तथा तत्प्रतीकारमपि जानासि। तदस्ति कश्चिदुपायो येन मे पतिः शतसंवत्सरजीवी भवति। ततस्तयाभिहितम्—वत्से सन्नपि नास्ति, यतस्तवायत्तः स प्रतीकारः। तच्छ्रुत्वा मयाभिहितम्—देवि, यदि 5 तन्मम प्राणैर्भवति, तदादेशय येन करोमि। अथ देव्याभिहितम्— यद्यद्यदिने परपुरुषेण सहैकस्मिञ्छयने समारुह्यालिङ्गनं करोषि, तत्तव भर्तृसक्तोऽपमृत्युस्तस्य संचरति। भर्तापि पुनर्वर्षशतं जीवति। तेन त्वं मयाभ्यर्थितः। तद्यत्किंचित्कर्तुमनास्तत्कुरुष्व। न हि देवतावचनमन्यथा भविष्यतीति निश्चयः।' ततोऽन्तर्हासविकाशमुखः स तदु10 चितमाचचार। सोऽपि रथकारो मूर्खस्तस्यास्तद्वचनमाकर्ण्य पुलकाङ्किततनुः शय्याधस्तलान्निष्क्रम्य तामुवाच—'साधु पतिव्रते, साधु कुलनन्दिनि, अहं दुर्जनवचनशङ्कितहृदयस्त्वत्परीक्षानिमित्तं ग्रामान्तरव्याजं कृत्वात्र खट्वाधस्तले निभृतं लीनः। तदेहि। आलिङ्गय माम्। त्वं स्वभर्तृभक्तानां मुख्या नारीणाम्, यदेवं ब्रह्मव्रतं परसङ्गेऽपि पालितवती। मदा15 युर्वृद्धिकृतेऽपमृत्युविनाशार्थं च त्वमेवं कृतवती।' तामेवमुक्त्वा सस्नेहमालिङ्गितवान्। स्वस्कन्धे तामारोप्य तमपि देवदत्तमुवाच— 'भो महानुभाव, मत्पुण्यैस्त्वमिहागतः। त्वत्प्रसादान्मया प्राप्तं वर्षशतप्रमाणमायुः। तत्त्वमपि मामालिङ्ग्य मत्स्कन्धे समारोह।' इति जल्पन्ननिच्छन्तमपि देवदत्तमालिङ्ग्य बलात्स्वकीयस्कन्ध आरो20 पितवान्। ततश्च नृत्यं कृत्वा 'हे ब्रह्मव्रतधराणां धुरीण, त्वयापि मय्युपकृतम्' इत्याद्युक्त्वा स्कन्धादुत्तार्य यत्र यत्र स्वजनगृहद्वारादिषु बभ्राम, तत्र तत्र तयोरुभयोरपि तद्गुणवर्णनमकरोत्। अतोऽहं ब्रवीमि—'प्रत्यक्षेऽपि कृते पापे' इति॥ तत्सर्वथा मूलोत्खाता वयं विनष्टाः स्मः। सुष्ठु खल्विदमुच्यते—

25 मित्ररूपा हि रिपवः संभाव्यन्ते विचक्षणैः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः॥ १९५॥

तथा च।

सन्तोऽप्यर्था विनश्यन्ति देशकालविरोधिनः।
अप्राज्ञान्मन्त्रिणः प्राप्य तमः सूर्योदये यथा'॥ १९६॥

30 ततस्तद्वचोऽनादृत्य सर्वे ते स्थिरजीविनमुत्क्षिप्य स्वदुर्गमानेतुमारब्धाः।

अथानीयमानः स्थिरजीव्याह—'देव, अद्याकिंचित्करेणैतदवस्थेन किं मयोपसंगृहीतेन, यत्कारणमिच्छामि दीप्तं वह्निमनुवेष्टुम् । तदर्हसि मामग्निप्रदानेन समुद्धर्तुम् । अथ रक्ताक्षस्तस्यान्तर्गतभावं ज्ञात्वाब्रवीत्—'किमर्थमग्निपतनमिच्छसि ।' सोऽब्रवीत्—'अहं तावद्युष्मदर्थं इमामापदं मेघवर्णेन प्रापितः । तदिच्छामि तेषां वैरयातनार्थमुलूकत्वमिति । तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह—'भद्र, कुटिलस्त्वं कृतकवचनचतुरश्च । तत्त्वमुलूकयोनिगतोऽपि स्वकीयामेव वायसयोनिं बहुमन्यसे । श्रूयते चैतदाख्यानकम्—

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् ।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा'॥ १९७ ॥

मन्त्रिणः प्रोचुः—'कथमेतत् ।' रक्ताक्षः कथयति—

## कथा १२ ।

अस्ति विषमशिलातलस्खलिताम्बुनिर्घोषश्रवणसंत्रस्तमत्स्यपरिवर्तनसंजनितश्वेतफेनशबलतरङ्गाया गङ्गायास्तटे जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः परिपूतपरिमितजलजिघृक्षुभिः कन्दमूलफलशैवलाभ्यवहारकदर्थितशरीरैर्वल्कलकृतकौपीनमात्रप्रच्छादनैस्तपस्विभिराकीर्णमाश्रमपदम् । तत्र याज्ञवल्क्यो नाम कुलपतिरासीत् । तस्य जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धस्य करतले श्येनमुखात्परिभ्रष्टा मूषिका पतिता । तां दृष्ट्वा न्यग्रोधपत्रेऽवस्थाप्य पुनः स्नात्वोपस्पृश्य च प्रायश्चित्तादिक्रियां कृत्वा च मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रममानिनाय । अनपत्यां च जायामाह—'भद्रे, गृह्यतामियं तव दुहितोत्पन्ना । प्रयत्नेन संवर्धनीया' इति। ततस्तया संवर्धिता लालिता पालिता च यावद्द्वादशवर्षा संजज्ञे । अथ विवाहयोग्यां तां दृष्ट्वा भर्तारमेव जायोवाच—'भो भर्तः, किमिदं नावबुध्यसे यथास्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति ।' असावाह—'साधूक्तम् । उक्तं च—

स्त्रियः पूर्वं सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः ।
भुञ्जते मानुषाः पश्चात्तस्माद्दोषो न विद्यते ॥ १९८ ॥
सोमस्तासां ददौ शौचं गन्धर्वाः शिक्षितां गिरम् ।
पावकः सर्वमेध्यत्वं तस्मान्निष्कलमषाः स्त्रियः ॥ १९९ ॥

असंप्राप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जना भवेत्कन्या कुचहीना च नग्निका ॥ २०० ॥
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकाम् ।
पयोधराभ्यां गन्धर्वा रजस्यग्निः प्रतिष्ठितः ॥ २०१ ॥
5 तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहश्चाष्टवर्षायाः कन्यायास्तु प्रशस्यते ॥ २०२ ॥
व्यञ्जनं हन्ति वै पूर्वं परं चैव पयोधरौ ।
रतिरिष्टांस्तथा लोकान्हन्याच्च पितरं रजः ॥ २०३ ॥
ऋतुमत्यां तु तिष्ठन्त्यां स्वेच्छादानं विधीयते ।
10 तस्मादुद्वाहयेन्नग्नां मनुः स्वायंभुवोऽब्रवीत् ॥ २०४ ॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
अविवाह्या तु सा कन्या जघन्या वृषली स्मृता ॥ २०५ ॥
श्रेष्ठेभ्यः सदृशेभ्यश्च जघन्येभ्यो रजस्वला ।
पित्रा देया विनिश्चित्य यतो दोषो न विद्यते ॥ २०६ ॥

15 अतोऽहमेनां सदृशाय प्रयच्छामि, नान्यस्मै । उक्तं च—

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥ २०७ ॥

तथा च ।

कुलं च शीलं च सनाथता च
20 विद्या च वित्तं च वपुर्वयश्च ।
एतान्गुणान्सप्त विचिन्त्य देया
कन्या बुधैः शेषमचिन्तनीयम् ॥ २०८ ॥

तद्यद्यस्या रोचते तदा भगवन्तमादित्यमाहूय तस्मै प्रयच्छामि ।' सा प्राह—'इह को दोषः । क्रियतामेतत् ।' अथ मुनिना रविराहूतः ।
25 वेदमन्त्रामन्त्रणप्रभावात्तत्क्षणादेवाभ्युपगम्यादित्यः प्रोवाच—'भगवन्, किमहमाहूतः ।' सोऽब्रवीत्—'एषा मदीया कन्यका तिष्ठति । यद्येषा त्वां वृणोति तर्ह्युद्वहस्व' इति । एवमुक्त्वा स्वदुहितरमुवाच—'पुत्रि, किं तव रोचत एष भगवांस्त्रैलोक्यदीपको भानुः ।' पुत्रिकाब्रवीत्—'तात, अतिदहनात्मकोऽयम् । नाहमेनमभिलषामि । तद्-

स्मादन्यः प्रकृष्टतरः कश्चिदाहूयताम् ।' अथ तस्यास्तद्वचनं श्रुत्वा मुनिर्भास्करमुवाच—'भगवन्, त्वत्तोऽधिकोऽस्ति कश्चित् ।' भास्करः प्राह—'अस्ति मत्तोऽप्यधिको मेघो येनाच्छादितोऽहमदृश्यो भवामि ।' अथ मुनिना मेघमप्याहूय कन्याभिहिता—'पुत्रिके, अस्मै त्वां प्रयच्छामि ।' सा प्राह—'कृष्णवर्णोऽयं जडात्मा च । तदस्मादन्यस्य प्रधानस्य कस्यचिन्मां प्रयच्छ ।' अथ मुनिना मेघोऽपि पृष्टः—'भो भो मेघ, त्वत्तोऽप्यधिकोऽस्ति कश्चित् ।' मेघेनोक्तम्—'मत्तोऽप्यधिकोऽस्ति वायुः । वायुना हतोऽहं सहस्रधा यामि ।' तच्छ्रुत्वा मुनिना वायुराहूतः । आह च—'पुत्रिके, किमेष वायुस्ते विवाहायोत्तमः प्रतिभाति ।' साब्रवीत्—'तात, अतिचपलोऽयम् । तदस्मादप्यधिकः कश्चिदानीयताम् ।' मुनिराह—'वायो, त्वत्तोऽप्यधिकोऽस्ति कश्चित् ।' पवनेनोक्तम्—'मत्तोऽप्यधिकोऽस्ति पर्वतो येन संस्तभ्य बलवानप्यहं ध्रिये ।' अथ मुनिः पर्वतमाहूय कन्यामुवाच—'पुत्रिके, त्वामस्मै प्रयच्छामि ।' सा प्राह—'तात, कठिनात्मकोऽयं स्तब्धश्च । तदन्यस्मै देहि माम् ।' मुनिना पर्वतः पृष्टः—'भोः पर्वतराज, त्वत्तोऽप्यधिकोऽस्ति कश्चित् ।' गिरिणोक्तम्—'मत्तोऽप्यधिकाः सन्ति मूषिका ये मच्छरीरं बलाद्विदारयन्ति ।' ततो मुनिर्मूषिकमाहूय तस्या अदर्शयत् । आह च—'पुत्रिके, त्वामस्मै प्रयच्छामि । किमेष प्रतिभाति ते मूषिकराजः ।' सापि तं दृष्ट्वा स्वजातीय एष इति मन्यमाना पुलकोद्भूषितशरीरोवाच—'तात, मां मूषिकां कृत्वास्मै प्रयच्छ । येन स्वजातिविहितं गृहधर्ममनुतिष्ठामि ।' ततः सोऽपि स्वतपोबलेन तां मूषिकां कृत्वा तस्मै प्रादात् । अतोऽहं ब्रवीमि—'सूर्यं भर्तारमुत्सृज्य' इति ॥ अथ रक्ताक्षवचनमनादृत्य तैः स्ववंशविनाशाय स स्वदुर्गमुपनीतः । नीयमानश्चान्तर्लीनमवहस्य स्थिरजीवी व्यचिन्तयत्—

'हन्यतामिति येनोक्तं स्वामिनो हितवादिना ।
स एवैकोऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित् ॥ २०९ ॥

तद्यदि तस्य वचनमकरिष्यन्नेते, ततो न स्वल्पोऽप्यनर्थोऽभविष्यदेतेषाम् । अथ दुर्गद्वारं प्राप्यारिमर्दनोऽब्रवीत्—'भो भोः, हितैषि-

णोऽस्य स्थिरजीविनो यथासमीहितं स्थानं प्रयच्छत ।' तच्च श्रुत्वा स्थिरजीवी व्यचिन्तयत्—'मया तावदेतेषां वधोपायश्चिन्तनीयः, स मया मध्यस्थेन न साध्यते । यतो मदीयमिङ्गितादिकं विचारयन्तस्तेऽपि सावधाना भविष्यन्ति । तद्दुर्गद्वारमधिश्रितोऽभिप्रेतं साधयामि ।'
5 इति निश्चित्योलूकपतिमाह—'देव, युक्तमिदं यत्स्वामिना प्रोक्तम् । परमहमपि नीतिज्ञस्तेऽहितश्च । यद्यप्यनुरक्तः शुचिस्तथापि दुर्गमध्य आवासो नार्हः । तदहमत्रैव दुर्गद्वारस्थः प्रत्यहं भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करिष्यामि ।' 'तथा' इति प्रतिपन्ने प्रतिदिनमुलूकपतिसेवकास्ते प्रकाममाहारं कृत्वोलूकराजादेशात्प्रकृ-
10 ष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति । अथ कतिपयैरेवाहोभिर्मयूर इव स बलवान्संवृत्तः । अथ रक्ताक्षः स्थिरजीविनं पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानं च प्रत्याह—'अहो, मूर्खोऽयं मन्त्रिजनो भवांश्चेत्येवमहमवगच्छामि । उक्तं च—

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः ।
15 ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलम्' ॥ २१० ॥

ते प्राहुः—'कथमेतत् ।' रक्ताक्षः कथयति—

## कथा १३ ।

अस्ति कस्मिंश्चित्पर्वतैकदेशे महान्वृक्षः । तत्र च सिन्धुकनामा कोऽपि पक्षी प्रतिवसति स्म । तस्य पुरीषे सुवर्णमुत्पद्यते । अथ क-
20 दाचित्तमुद्दिश्य व्याधः कोऽपि समाययौ । स च पक्षी तदग्रत एव पुरीषमुत्ससर्ज । अथ पातसमकालमेव तत्सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयमगमत्—'अहो, मम शिशुकालादारभ्य शकुनिबन्धव्यसनिनोऽशीतिवर्षाणि समभूवन् । न च कदाचिदपि पक्षिपुरीषे सुवर्णं दृष्टम् ।' इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध । अथासावपि पक्षी मूर्खस्तत्रैव विश्व-
25 स्तचित्तो यथापूर्वमुपविष्टः । तत्कालमेव पाशेन बद्धः । व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान् । अथ चिन्तयामास—'किमनेन सापायेन पक्षिणाहं करिष्यामि । यदि कदाचित्कोऽप्यमुमीदृशं ज्ञात्वा राज्ञे निवेदयिष्यति, तन्नूनं प्राणसंशयो मे भवेत् । अतः स्वयमेव पक्षिणं राज्ञे निवेदयामि ।' इति विचार्य तथै-

वानुष्ठितवान् । अथ राजापि तं पक्षिणं दृष्ट्वा विकसितनयनवदनकमलः परां तुष्टिमुपागतः । प्राह चैवम्—'हंहो रक्षापुरुषाः, एनं पक्षिणं यत्नेन रक्षत । अशनपानादिकं चास्य यथेच्छं प्रयच्छत ।' अथ मन्त्रिणाभिहितम्—'किमनेनाश्रद्धेयव्याधवचनप्रत्ययमात्रपरिगृहीतेनाण्डजेन । किं कदाचित्पक्षिपुरीषे सुवर्णं संभवति। तन्मुच्यतां 5 पञ्जरबन्धनादयं पक्षी ।' इति मन्त्रिवचनाद्राज्ञा मोचितोऽसौ पक्ष्युन्नतद्वारतोरणे समुपविश्य सुवर्णमयीं विष्ठां विधाय 'पूर्वं तावदहं मूर्खः' इति श्लोकं पठित्वा यथासुखमाकाशमार्गेण प्रायात् । अतोऽहं ब्रवीमि—'पूर्वं तावदहं मूर्खः' इति ॥ अथ ते पुनरपि प्रतिकूलदैवतया हितमपि रक्ताक्षवचनमनादृत्य भूयस्तं प्रभूत- 10 मांसादिविविधाहारेण पोषयामासुः । अथ रक्ताक्षः स्ववर्गमाहूय रहः प्रोवाच—'अहो, एतावदेवास्मद्भूपतेः कुशलं दुर्गं च । तदुपदिष्टं मया यत्कुलक्रमागतः सचिवोऽभिधत्ते । तद्वयमन्यत्पर्वतदुर्गं संप्रति समाश्रयामः । उक्तं च यतः—

> अनागतं यः कुरुते स शोभते 15
> स शोच्यते यो न करोत्यनागतम् ।
> वनेऽत्र संस्थस्य समागता जरा
> बिलस्य वाणी न कदापि मे श्रुता ॥ २११ ॥

ते प्रोचुः—'कथमेतत् ।' रक्ताक्षः कथयति—

### कथा १४ । 20

कस्मिंश्चिद्वनोद्देशे खरनखरो नाम सिंहः प्रतिवसति स्म । स कदाचिदितश्चेतश्च परिभ्रमन्क्षुत्क्षामकण्ठो न किंचिदपि सत्त्वमाससाद । ततश्चास्तमनसमये महतीं गिरिगुहामासाद्य प्रविष्टश्चिन्तयामास—'नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम्। तन्निभृतो भूत्वा तिष्ठामि। एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो 25 नाम शृगालः समायातः । स च यावत्पश्यति, तावत्सिंहपदपद्धतिर्गुहायां प्रविष्टा न च निष्क्रमणं गता । ततश्चाचिन्तयत्—'अहो, विनष्टोऽस्मि । नूनमस्यामन्तर्गतेन सिंहेन भाव्यम् । तत्किं करोमि । कथं ज्ञास्यामि ।' एवं विचिन्त्य द्वारस्थः फूत्कर्तुमारब्धः—'अहो

बिल, अहो बिल,' इत्युक्त्वा तूष्णींभूय भूयोऽपि तथैव प्रत्यभाषत—'भोः, किं न स्मरसि यन्मया त्वया सह समयः कृतोऽस्ति। यन्मया बाह्यात्समागतेन त्वं वक्तव्यः। त्वया चाहमाकारणीय इति। तद्यदि मां नाह्वयसि ततोऽहं द्वितीयं बिलं यास्यामि।' अथ तच्छ्रुत्वा सिंहश्चिन्तितवान्—'नूनमेषा गुहास्य समागतस्य सदा समाह्वानं करोति। परमद्य मद्भयान्न किंचिद्ब्रूते। अथवा साध्विदमुच्यते—

भयसंत्रस्तमनसां हस्तपादादिकाः क्रियाः।
प्रवर्तन्ते न वाणी च वेपथुश्चाधिको भवेत् ॥ २१२ ॥

तदहमस्याह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां यास्यति।' एवं संप्रधार्य सिंहस्तस्याह्वानमकरोत्। अथ सिंहशब्देन सा गुहा प्रतिरवसंपूर्णान्यानपि दूरस्थानरण्यजीवांस्त्रासयामास। शृगालोऽपि पलायमान इमं श्लोकमपठत्—

'अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता ॥ २१३ ॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यम्' इति। एवमभिधायात्मानुयायिपरिवारानुगतो दूरदेशान्तरं रक्ताक्षो जगाम।

अथ रक्ताक्षे गते स्थिरजीव्यतिहृष्टमना व्यचिन्तयत्—'अहो, कल्याणमस्माकमुपस्थितं यद्रक्ताक्षो गतः। यतः स दीर्घदर्शी। एते च मूढमनसः। ततो मम सुखघात्या संजाताः। उक्तं च यतः—

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः।
क्रमायाता ध्रुवं तस्य न चिरात्स्यात्परिक्षयः ॥ २१४ ॥

अथवा साध्विदमुच्यते—

मन्त्रिरूपा हि रिपवः संभाव्यन्ते विचक्षणैः।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः' ॥ २१५ ॥

एवं विचिन्त्य स्वकुलाय एकैकां वनकाष्ठिकां गुहादीपनार्थं दिने दिने प्रक्षिपति। न च ते मूर्खा उलूका विजानन्ति, यदेष कुलायमस्मद्दाहाय वृद्धिं नयति। अथवा साध्विदमुच्यते—

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च।
शुभं वेत्त्यशुभं पापं भद्रं दैवहतो नरः॥ २१६॥

अथ कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये संजाते सूर्योदयेऽन्धतां प्राप्तेषूलूकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह—'स्वामिन्, दाहसाध्या कृता रिपुगुहा। तत्सपरिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारेऽस्मत्कुलाये प्रक्षिप, येन सर्वे शत्रवः कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते।' तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह—'तात, कथयात्मवृत्तान्तम्। चिरादद्य दृष्टोऽसि।' स आह—'वत्स, नायं कथनस्य कालः। यतः कदाचित्तस्य रिपोः कश्चित्प्रणिधिर्ममेहागमनं निवेदयिष्यति, तज्ज्ञानादन्धोऽन्यत्रापसरणं करिष्यति। तत्त्वर्यताम्। उक्तं च—

शीघ्रकृत्येषु कार्येषु विलम्बयति यो नरः।
तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम्॥ २१७॥

तथा च।

यस्य यस्य हि कार्यस्य फलितस्य विशेषतः।
क्षिप्रमक्रियमाणत्वं कालः पिबति तत्फलम्॥ २१८॥

तद्गुहायामायातस्य ते हतशत्रोः सर्वं सविस्तारं निर्व्याकुलतया कथयिष्यामि।' अथासौ तद्वचनमाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्चग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्यावृतत्वादनिःसरन्तो गुहामध्ये कुम्भीपाकन्यायमापन्ना मृताश्च। एवं शत्रून्निःशेषतां नीत्वा भूयोऽपि मेघवर्णस्तदेव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनमपृच्छत्—'तात, कथं त्वया शत्रुमध्ये गतेनैतावत्कालो नीतः। तदत्र कौतुकमस्माकं वर्तते। तत्कथ्यताम्। यतः।

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम्।
न चारिजनसंसर्गो मुहूर्तमपि सेवितः'॥ २१९॥

तदाकर्ण्य स्थिरजीव्याह—'भद्र, आगामिफलवाञ्छया कष्टमपि सेवको न जानाति। उक्तं च यतः—

उपनतभयैर्यो यो मार्गो हितार्थकरो भवे-
त्स स निपुणया बुद्ध्या सेव्यो महान्कृपणोऽपि वा ।
करिकरनिभौ ज्याघाताङ्कौ महार्थविशारदौ
रचितवलयैः स्त्रीवद्बद्धौ करौ हि किरीटिना ॥ २२० ॥

5 शक्तेनापि सदा नरेन्द्रविदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वाक्यवज्रविषमे क्षुद्रेऽपि पापे जने ।
दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन च
भीमेनातिबलेन मत्स्यभवने किं नोषितं सूदवत् ॥ २२१ ॥
यद्वा तद्वा विषमपतितं साधु वा गर्हितं वा
10 कालापेक्षी हृदयनिहितं बुद्धिमान्कर्म कुर्यात् ।
किं गाण्डीवस्फुरदुरुघनास्फालनक्रूरपाणि-
र्नासील्लीलानटनविलसन्मेखली सव्यसाची ॥ २२२ ॥
सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं प्रकार्यं क्रमात् ।
15 देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्मात्मजः ॥ २२३ ॥

रूपाभिजनसंपन्नौ कुन्तीपुत्रौ बलान्वितौ ।
गोकर्मरक्षाव्यापारे विराटप्रेष्यतां गतौ ॥ २२४ ॥

रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना
20 कान्त्या श्रीरिव यात्र सापि विदशां कालक्रमादागता ।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमज्ञातया
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम्' ॥२२५॥

मेघवर्ण आह—'तात, असिधाराव्रतमिदं मन्ये यदरिणा सह संवासः ।' सोऽब्रवीत्—'देव, एवमेतत् । परं न तादृङ्मूर्खसमागमः 25 क्वापि मया दृष्टः । न च महाप्रज्ञमनेकशास्त्रेष्वप्रतिमबुद्धिं रक्ताक्षं विना धीमान् । यत्कारणं तेन मदीयं यथावस्थितं चित्तं ज्ञातम् । ये पुनरन्ये मन्त्रिणस्ते महामूर्खा मन्त्रिमात्रव्यपदेशोपजीविनोऽतत्त्वकुशला यैरिदमपि न ज्ञातम् । यतः ।

अरितोऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः ।
30 अपसर्प्य स धर्मत्वान्नित्योद्वेगी च दूषितः ॥ २२६ ॥

आसने शयने याने पानभोजनवस्तुषु ।
दृष्टादृष्टप्रमत्तेषु प्रहरन्त्यरयोऽरिषु ॥ २२७ ॥
तस्मात्सर्वप्रयत्नेन त्रिवर्गनिलयं बुधः ।
आत्मानमादृतो रक्षेत्प्रमादाद्धि विनश्यति ॥ २२८ ॥

साधु चेदमुच्यते— 5

संतापयन्ति कमपथ्यभुजं न रोगा
दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परिपीडयन्ति ॥ २२९ ॥
लुब्धस्य नश्यति यशः पिशुनस्य मैत्री 10
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ २३० ॥

तद्राजन्, असिधाराव्रतं मयाचरितमरिसंसर्गादिति यद्भवतोक्तम्, तन्मया साक्षादेवानुभूतम् । उक्तं च— 15

अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वार्थमभ्युद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ २३१ ॥
स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान् ।
महता कृष्णसर्पेण मण्डूका बहवो हताः' ॥ २३२ ॥

मेघवर्ण आह—'कथमेतत् ।' स्थिरजीवी कथयति— 20

## कथा १९ ।

अस्ति वरुणाद्रिसमीप एकस्मिन्प्रदेशे परिणतवया मन्दविषो नाम कृष्णसर्पः । स एवं चित्ते संचिन्तितवान्—'कथं नाम मया सुखोपायवृत्त्या वर्तितव्यम्' इति । ततो बहुमण्डूकं ह्रदमुपगम्य धृतिपरीतमिवात्मानं दर्शितवान् । अथ तथा स्थिते तस्मिन्नुदकप्रान्तगते- 25 नैकेन मण्डूकेन पृष्टः—'माम, किमद्य यथापूर्वमाहारार्थं न विहरसि ।' सोऽब्रवीत्—'भद्र, कुतो मे मन्दभाग्यस्याहाराभिलाषः । यत्कारणमद्य रात्रौ प्रदोष एव मयाहारार्थं विहरमाणेन दृष्ट एको मण्डूकः । तद्ग्रहणार्थं मया क्रमः सज्जितः । सोऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्या-

यप्रसक्तानां ब्राह्मणानामन्तरमपक्रान्तो न विभावितो मया क्वापि गतः।
तत्सदृशमोहितचित्तेन मया कस्यचिद्ब्राह्मणस्य सूनोर्ह्रदतटजलान्तः-
स्थोऽङ्गुष्ठो दष्टः। ततोऽसौ सपदि पञ्चत्वमुपागतः। अथ तस्य पित्रा
दुःखितेनाहं शप्तः—यथा दुरात्मन्, त्वया निरपराधो मत्सुतो
दष्टः। तदनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि। तत्प्रसादल-
ब्धजीविकया वर्तिष्यसे इति। ततोऽहं युष्माकं वाहनार्थमागतो-
ऽस्मि। तेन च सर्वमण्डूकानामिदमावेदितम्। ततस्तैः प्रहृष्टमनोभिः
सर्वैरेव गत्वा जलपादनाम्नो दर्दुरराजस्य विज्ञप्तम्। अथासावपि म-
न्त्रिपरिवृतोऽत्यद्भुतमिदमिति मन्यमानः ससंभ्रमं ह्रदादुत्तीर्य मन्द-
विषस्य फणिनः फणप्रदेशमधिरूढः। शेषा अपि यथाज्येष्ठं तत्पृष्ठो-
परि समारुरुहुः। किं बहुना। तदुपरि स्थानमप्राप्तवन्तस्तस्यानुपदं धा-
वन्ति। मन्दविषोऽपि तेषां तुष्ट्यर्थमनेकप्रकारान्गतिविशेषानदर्शयत्।
अथ जलपादो लब्धतदङ्गसंस्पर्शसुखस्तमाह—

'न तथा करिणा यानं तुरगेण रथेन वा।
नरयानेन वा यानं यथा मन्दविषेण मे' ॥ २३३ ॥

अथान्येद्युर्मन्दविषश्छद्मना मन्दं मन्दं विसर्पति। तच्च दृष्ट्वा जलपा-
दोऽब्रवीत्—'भद्र मन्दविष, यथापूर्वं किमद्य साधु नोह्यते।' मन्द-
विषोऽब्रवीत्—'देव, अद्याहारवैकल्यान्न मे वोढुं शक्तिरस्ति।' अ-
थासावब्रवीत्—'भद्र, भक्षय क्षुद्रमण्डूकान्।' तच्छ्रुत्वा प्रहर्षितस-
र्वगात्रो मन्दविषः ससंभ्रममब्रवीत्—'ममायमेव विप्रशापोऽस्ति।
तत्तवानेनानुज्ञावचनेन प्रीतोऽस्मि।' ततोऽसौ नैरन्तर्येण मण्डूकान्भक्षय-
न्कतिपयैरेवाहोभिर्बलवान्संवृत्तः। प्रहृष्टश्चान्तर्लीनमवहस्येदमब्रवीत्—

'मण्डूका विविधा ह्येते छलपूर्वोपसाधिताः।
कियन्तं कालमक्षीणा भवेयुः खादिता मम' ॥ २३४ ॥

जलपादोऽपि मन्दविषेण कृतकवचनव्यामोहितचित्तः किमपि नावबु-
ध्यते। अत्रान्तरेऽन्यो महाकायः कृष्णसर्पस्तमुद्देशं समायातः।
तं च मण्डूकैर्वाह्यमानं दृष्ट्वा विस्मयमगमत्। आह च—'वयस्य,
यदस्माकमशनं तैः कथं वाह्यसे। विरुद्धमेतत्।' मन्दविषोऽब्रवीत्—

सर्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किंचित्कालं प्रतीक्ष्योऽहं घृतान्धो ब्राह्मणो यथा'॥ २३५॥

सोऽब्रवीत्—'कथमेतत् ।' मन्दविषः कथयति—

## कथा १६ ।

अस्ति कस्मिंश्चिदधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः । तस्य भार्या पुंश्चल्यन्यासक्तमना अजस्रं विटाय सखण्डघृतान्घृतपूरान्कृत्वा भर्तुश्चौरिकया प्रयच्छति । अथ कदाचिद्भर्ता दृष्ट्वाब्रवीत्—'भद्रे, किमेतत्परिदृश्यते। कुत्र वाजस्रं नयसीदम्। कथय सत्यम् ।' सा चोत्पन्नप्रतिभा कृतकवचनैर्भर्तारमब्रवीत्—'अस्त्यत्र नातिदूरे भगवत्या देव्या आयतनम् । तत्राहमुपोषिता सती बलिं भक्ष्यविशेषांश्चापूर्वान्नयामि।' अथ तस्य पश्यतो गृहीत्वा तत्सकलं देव्यायतनाभिमुखी प्रतस्थे । यत्कारणं देव्या निवेदितेनानेन मदीयो भर्तैवं मंस्यते यन्मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान्नित्यमेव नयतीति । अथ देव्यायतने गत्वा स्नानार्थं नद्यामवतीर्य यावत्स्नानक्रियां करोति, तावद्भर्तान्यमार्गान्तरेणागत्य देव्याः पृष्ठतोऽदृश्योऽवतस्थे । अथ सा ब्राह्मणी स्नात्वा देव्यायतनमागत्य स्नानानुलेपनमाल्यधूपबलिक्रियादिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत्—'भगवति, केन प्रकारेण मम भर्तान्धो भविष्यति।' तच्छ्रुत्वा स्वरभेदेन देवीपृष्ठस्थितो ब्राह्मणो जगाद— 'यदि त्वमजस्रं घृतपूरादिभक्ष्यं तस्मै भर्त्रे प्रयच्छसि, ततः शीघ्रमन्धो भविष्यति।' सा तु बन्धकी कृतकवचनवञ्चितमानसा तस्मै ब्राह्मणाय तदेव नित्यं प्रददौ । अथान्येद्युर्ब्राह्मणेनाभिहितम्—'भद्रे, नाहं सुतरां पश्यामि ।' तच्छ्रुत्वा चिन्तितमनया—'देव्याः प्रसादोऽयं प्राप्तः' इति । अथ तस्या हृदयवल्लभो विटस्तत्सकाशमन्धीभूतोऽयं ब्राह्मणः किं मम करिष्यतीति निःशङ्कः प्रतिदिनमभ्येति । अथान्येद्युस्तं प्रविशन्तमभ्यासगतं दृष्ट्वा केशैर्गृहीत्वा लगुडपार्ष्णिप्रभृतिप्रहारैस्तावदताडयत्, यावदसौ पञ्चत्वमाप । तामपि दुष्टपत्नीं छिन्ननासिकां कृत्वा विससर्ज । अतोऽहं ब्रवीमि—'सर्वमेतद्विजानामि' इति ॥

अथ मन्दविषोऽन्तर्लीनमवहस्य पुनरपि मण्डूका विविधास्वादा इति तमेवमब्रवीत् । अथ जलपादस्तच्छ्रुत्वा सुतरां व्यग्रहृदयः 'किमनेनाभिहितम्' इति तमपृच्छत्—'भद्र, किं त्वयाभिहितमिदं विरुद्धं वचः । अथासावाकारप्रच्छादनार्थं 'न किंचित्' इत्यब्रवीत् । तथैव कृतकवचनव्यामोहितचित्तो जलपादस्तस्य दुष्टाभिसंधिं नावबुध्यते । किं बहुना।

तथा तेन सर्वेऽपि भक्षिता यथा बीजमात्रमपि नावशिष्टम्। अतोऽहं ब्रवीमि—'स्कन्धेनापि वहेच्छत्रुम्' इति ॥ अथ राजन्, यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः, तथा मयापि सर्वेऽपि वैरिण इति। साधु चेदमुच्यते—

5 वने प्रज्वलितो वह्निर्दहन्मूलानि रक्षति।
स मूलोन्मूलनं कुर्याद्वायुर्यो मृदुशीतलः' ॥ २३६ ॥

मेघवर्ण आह—'तात, सत्यमेवैतत्। ये महात्मानो भवन्ति ते महासत्त्वा आपद्गता अपि प्रारब्धं न सर्जन्ति। उक्तं च यतः—

महत्त्वमेतन्महतां नयालंकारधारिणाम्।
10 न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये ॥ २३७ ॥

तथा च।

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः
15 प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २३८ ॥

तत्कृतं निष्कण्टकं मम राज्यं शत्रून्निःशेषतां नयता त्वया। अथवा युक्तमेतन्नयवेदिनाम्। उक्तं च यतः—

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च।
व्याधिशेषं च निःशेषं कृत्वा प्राज्ञो न सीदति' ॥ २३९ ॥

20 सोऽब्रवीत्—'देव, भाग्यवांस्त्वमेवासि, यस्यारब्धं सर्वमेव संसिध्यति। तत्र केवलं शौर्यं कृत्यं साधयति, किंतु प्रज्ञया यत्क्रियते तदेव विजयाय भवति। उक्तं च—

शस्त्रैर्हता न हि हता रिपवो भवन्ति
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति।
25 शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ २४० ॥

तदेवं प्रज्ञापुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः संभवन्ति।

प्रसरति मतिः कार्यारम्भे दृढीभवति स्मृतिः
स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम्।

स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ २४१ ॥

तथा च । नयत्यागशौर्यसंपन्ने पुरुषे राज्यमिति । उक्तं च—
त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम्' ॥ २४२ ॥ 5

मेघवर्ण आह—'नूनं सद्यःफलानि नीतिशास्त्राणि, यत्त्वयानुकृत्येनानुप्रविश्यारिमर्दनः सपरिजनो निःशेषितः ।' स्थिरजीव्याह—

'तीक्ष्णोपायप्राप्तिगम्योऽपि योऽर्थः
तस्याप्यादौ संश्रयः साधुयुक्तः ।
उत्तुङ्गाग्रः सारभूतो वनानां 10
मान्याभ्यर्च्यैश्छिद्यते पादपेन्द्रः ॥ २४३ ॥

अथवा स्वामिन्, किं तेनाभिहितेन यदनन्तरकाले क्रियारहितमसुखसाध्यं वा भवति । साधु चेदमुच्यते—

अनिश्चितैरध्यवसायभीरुभिः
पदे पदे दोषशतानुदर्शिभिः । 15
फलैर्विसंवादमुपागता गिरः
प्रयान्ति लोके परिहासवस्तुताम् ॥ २४४ ॥

न च लघुष्वपि कर्तव्येषु धीमद्भिरनादरः कार्यः । यतः ।

शक्यामि कर्तुमिदमल्पमयत्नसाध्यमत्रादरः क इति कृत्यमुपेक्षमाणाः । 20
केचित्प्रमत्तमनसः परितापदुःखमापत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥ २४५ ॥

तदद्य जितारेर्मद्विभोर्यथापूर्वं निद्रालाभो भविष्यति । उच्यते चैतत्—

निःसर्पे बद्धसर्पे वा भवने सुप्यते सुखम् ।
सदा दृष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते ॥ २४६ ॥ 25

तथा च ।

विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपभुक्ताशिषां
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम् ।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः
सामर्षे हृदयेऽवकाशविषया तावत्कथं निर्वृतिः ॥ २४७ ॥ 30

तदवसितकार्यारम्भस्य विश्राम्यतीव मे हृदयम् । तदिदमधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेणाचलच्छत्रासनश्रीश्चिरं भुङ्क्ष्व । अपि च ।

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
5 अजागलस्तनस्येव तस्य राज्यं निरर्थकम् ॥ २४८ ॥

गुणेषु रागो व्यसनेष्वनादरो
रतिः सुभृत्येषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकां
सितातपत्राभरणां नृपश्रियम् ॥ २४९ ॥

10 न च त्वया प्राप्तराज्योऽहमिति मत्वा श्रीमदेनात्मा व्यंसयितव्यः । यत्कारणं चला हि राज्ञो विभूतयः, वंशारोहणवद्राज्यलक्ष्मीर्दुरारोहा, क्षणविनिपातरता प्रयत्नशतैरपि धार्यमाणा दुर्धरा, प्रशस्ताराधिताप्यन्ते विप्रलम्भिनी, वानरजातिरिव विद्रुतानेकचित्ता, पद्मपत्रोदकमिवाघटितसंश्लेषा, पवनगतिरिवातिचपला, अनार्यसंगतमिवा-
15 स्थिरा, आशीविष इव दुरुपचारा, संध्याभ्रलेखेव मुहूर्तरागा, जलबुद्बुदावलीव स्वभावभङ्गुरा, शरीरप्रकृतिरिव कृतघ्ना, स्वप्नलब्धद्रव्यराशिरिव क्षणदृष्टनष्टा । अपि च ।

यदैव राज्ये क्रियतेऽभिषेक-
स्तदैव बुद्धिर्व्यसनेषु योज्या ।
20 घटा हि राज्ञामभिषेककाले
सहाम्भसेवापदमुद्गिरन्ति ॥ २५० ॥

न च कश्चिदनधिगमनीयो नामास्त्यापदाम् । उक्तं च—

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
25 नाट्याचार्यकमर्जुनस्य पतनं संचिन्त्य लङ्केश्वरे
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते ॥ २५१ ॥

क्व स दशरथः स्वर्गे भूत्वा महेन्द्रसुहृद्गतः
क्व स जलनिधेर्वेलां बध्वा नृपः सगरस्तथा ।
क्व स करतलाज्जातो वैण्यः क्व सूर्यतनुर्मनु-
30 र्ननु बलवता कालेनैते प्रबोध्य निमीलिताः ॥ २५२ ॥

मांधाता क्व गतस्त्रिलोकविजयी राजा क्व सत्यव्रतो
देवानां नृपतिर्गतः क्व नहुषः सच्छास्त्रवान्केशवः ।
मन्यन्ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः
कालेनैव महात्मना त्वनुकृता कालेन निर्वासिताः ॥ २९३ ॥

अपि च । 5

स च नृपतिस्ते सचिवास्ताः प्रमदास्तानि काननवनानि ।
स च ते च ताश्च तानि च कृतान्तदृष्टानि नष्टानि ॥ २९४ ॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीमवाप्य न्यायैकनिष्ठो भूत्वोपभुङ्क्ष्व ।

**इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके काकोलूकीयं नाम तृतीयं तन्त्रं समाप्तम् ।** 10



# लब्धप्रणाशम् ।

अथेदमारभ्यते लब्धप्रणाशं नाम चतुर्थं तन्त्रम् । यस्यायमादिमः श्लोकः—

समुत्पन्नेषु कार्येषु बुद्धिर्यस्य न हीयते ।
5 स एव दुर्गं तरति जलस्थो वानरो यथा ॥ १ ॥

तद्यथानुश्रूयते—अस्ति कस्मिंश्चित्समुद्रोपकण्ठे महाञ्जम्बूपादपः सदाफलः । तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म । तत्र च तस्य तरोरधः कदाचित्करालमुखो नाम मकरः समुद्रसलिलान्निष्क्रम्य सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत् । ततश्च रक्तमुखेन स 10 प्रोक्तः—'भोः, भवान्समभ्यागतोऽतिथिः । तद्भक्षयतु मया दत्तान्यमृततुल्यानि जम्बूफलानि । उक्तं च—

प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः ।
वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसंक्रमः ॥ २ ॥

न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च ।
15 अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत् ॥ ३ ॥

दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम् ।
अतिथिं पूजयेद्यस्तु स याति परमां गतिम् ॥ ४ ॥

अपूजितोऽतिथिर्यस्य गृहाद्याति विनिश्वसन् ।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः' ॥ ५ ॥

20 एवमुक्त्वा तस्मै जम्बूफलानि ददौ । सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोऽपि स्वभवनमगात् । एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः । सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति । अथान्यतमे दिवसे तया स पृष्टः— 25 'नाथ, क्वैवंविधान्यमृतफलानि प्राप्नोषि ।' स आह—'भद्रे, ममास्ति परमसुहृद्रक्तमुखो नाम वानरः । स प्रीतिपूर्वमिमानि फलानि प्रयच्छति ।' अथ तयाभिहितम्—'यः सदैवामृतप्रायाणीदृशानि फलानि भक्षयति, तस्य हृदयममृतमयं भविष्यति । तद्यदि मया भा-

येया ते प्रयोजनम्, ततस्तस्य हृदयं मह्यं प्रयच्छ । येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान्भुनज्मि ।' स आह—'भद्रे, मा मैवं वद । यतः स प्रतिपन्नोऽस्माकं भ्राता । अपरं फलदाता । ततो व्यापादयितुं न शक्यते । तत्त्यजैनं मिथ्याग्रहम् । उक्तं च—

एकं प्रसूयते माता द्वितीयं वाक्प्रसूयते । 5
वाग्जातमधिकं प्रोचुः सोदर्यादपि बन्धुवत्' ॥ ६ ॥

अथ मकर्याह—'त्वया कदाचिदपि मम वचनं नान्यथा कृतम् । तन्नूनं सा वानरी भविष्यति, यतस्तस्या अनुरागतः सकलमपि दिनं तत्र गमयसि । तत्त्वं ज्ञातो मया सम्यक् । यतः—

साह्लादं वचनं प्रयच्छसि न मे नो वाञ्छितं किंचन 10
प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु ।
कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादराच्चुम्बसे
तत्ते धूर्त हृदि स्थिता प्रियतमा काचिन्ममैवापरा' ॥ ७ ॥

सोऽपि पत्न्याः पादोपसंग्रहं कृत्वाङ्कोपरि निधाय तस्याः कोपकोटिमापन्नायाः पत्न्याः सुदीनमुवाच— 15

'मयि ते पादपतिते किंकरत्वमुपागते ।
त्वं प्राणवल्लभे कस्मात्कोपने कोपमेष्यसि' ॥ ८ ॥

सापि तद्वचनमाकर्ण्याश्रुप्लुतमुखी तमुवाच—

'सार्धं मनोरथशतैस्तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या । 20
अस्माकमस्ति न कथंचिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ ९ ॥

अपरं सा यदि तव वल्लभा न भवति, तत्किं मया भणितेऽपि तां न व्यापादयसि । अथ यदि स वानरस्तत्कस्तेन सह तव स्नेहः । तत्किं बहुना । यदि तस्य हृदयं न भक्षयामि, तन्मया प्रायोपवेशनं कृतं 25 विद्धि ।' एवं तस्यास्तन्निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः स प्रोवाच । अथवा साध्विदमुच्यते—

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥ १० ॥

'तत्किं करोमि । कथं स मे वध्यो भवति ।' इति विचिन्त्य वानर-पार्श्वमगमत् । वानरोऽपि चिरायान्तं तं सोद्वेगमवलोक्य प्रोवाच—'भो मित्र, किमद्य चिरवेलायां समायातोऽसि । कस्मात्साह्लादं नालपसि । न सुभाषितानि पठसि ।' स आह—'मित्र, अहं तव भ्रातृजायया निष्ठुरतरैर्वाक्यैरभिहितः—भोः कृतघ्न, मा मे त्वं स्वमुखं दर्शय, यतस्त्वं प्रतिदिनं मित्रमुपजीवसि । न च तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणापि न करोषि । तत्ते प्रायश्चित्तमपि नास्ति । उक्तं च—

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ११ ॥

तत्त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमानय । नो चेत्त्वया सह मे परलोके दर्शनम् । तदहं तयैवं प्रोक्तस्तव सकाशमागतः । तदद्य तया सह त्वदर्थे कलहायतो ममेयती वेला विलग्ना । तदागच्छ मे गृहम् । तव भ्रातृपत्नी रचितचतुष्का प्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति ।' मर्कट आह—'भो मित्र, युक्तमभिहितं मद्भ्रातृपत्न्या । उक्तं च—

वर्जयेत्कौलिकाकारं मित्रं प्राज्ञतरो नरः ।
आत्मनः संमुखं नित्यं य आकर्षति लोलुपः ॥ १२ ॥

तथा च ।

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ १३ ॥

परं वयं वनचराः, युष्मदीयं च जलान्ते गृहम् । तत्कथं शक्यते तत्र गन्तुम् । तस्मात्तामपि मे भ्रातृपत्नीमत्रानय येन प्रणम्य तस्या आशीर्वादं गृह्णामि ।' स आह—'भो मित्र, अस्ति समुद्रान्तरे सुरम्ये पुलिनप्रदेशेऽस्मद्गृहम् । तन्मम पृष्ठमारूढः सुखेनाकृतभयो गच्छ ।' सोऽपि तच्छ्रुत्वा सानन्दमाह—'भद्र, यद्येवं तत्किं विलम्ब्यते । त्वर्यताम् । एषोऽहं तव पृष्ठमारूढः ।' तथानुष्ठितेऽगाधे जलधौ गच्छन्तं मकरमालोक्य भयत्रस्तमना वानरः प्रोवाच—'भ्रातः, शनैः शनैर्ग-

म्यताम् । जलकल्लोलैः प्लाव्यते मे शरीरम् ।' तदाकर्ण्य मकरश्चिन्तयामास—'असावगाधं जलं प्राप्तो मे वशः संजातः । मत्पृष्ठगतस्तिलमात्रमपि चलितुं न शक्नोति । तस्मात्कथयाम्यस्य निजाभिप्रायम्, येनाभीष्टदेवतास्मरणं करोति ।' आह च—'मित्र, त्वं मया वधाय समानीतो भार्यावाक्येन विश्वास्य । तत्स्मर्यतामभीष्टदेवता ।' स 5
आह—'भ्रातः, किं मया तस्यास्तवापि चापकृतं येन मे वधोपायश्चिन्तितः ।' मकर आह—'भोः, तस्यास्तावत्तव हृदयस्यामृतमयफलरसास्वादनमृष्टस्य भक्षणे दोहदः संजातः । तेनैतदनुष्ठितम् ।' प्रत्युत्पन्नमतिर्वानर आह—'भद्र, यद्येवं तत्किं त्वया मम तत्रैव न व्याहृतम् । येन स्वहृदयं जम्बूकोटरे सदैव मया सुगुप्तं कृतम्, 10
तद्भ्रातृपत्न्या अर्पयामि । त्वयाहं शून्यहृदयोऽत्र कस्मादानीतः ।' तदाकर्ण्य मकरः सानन्दमाह—'भद्र, यद्येवं तदर्पय मे हृदयम् । येन सा दुष्टपत्नी तद्भक्षयित्वानशनादुत्तिष्ठति । अहं त्वां तमेव जम्बूपादपं प्रापयामि ।' एवमुक्त्वा निवर्त्य जम्बूतलमगात् । वानरोऽपि कथमपि जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान् । ततश्च दीर्घतरचङ्- 15
क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास—'अहो, लब्धास्तावत्प्राणाः । अथवा साध्विदमुच्यते—

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १४ ॥

तन्ममैतदद्य पुनर्जन्मदिनमिव संजातम् ।' इति चिन्तयमानं मकर 20
आह—'भो मित्र, अर्पय तद्धृदयं यथा ते भ्रातृपत्नी भक्षयित्वानशनादुत्तिष्ठति ।' अथ विहस्य निर्भर्त्सयन्वानरस्तमाह—'धिग्धिङ्मूर्ख विश्वासघातक, किं कस्यचिद्धृदयद्वयं भवति । तदाशु गम्यताम् । जम्बूवृक्षस्याधस्तान्न भूयोऽपि त्वयात्रागन्तव्यम् । उक्तं च यतः— 25

सकृद्दुष्टं च यो मित्रं पुनः संधातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा' ॥ १५ ॥

तच्छ्रुत्वा मकरः सविलक्षं चिन्तितवान्—'अहो, मयातिमूढेन किमस्य स्वचित्ताभिप्रायो निवेदितः, तद्यद्यसौ पुनरपि कथंचिद्विश्वासं ग-

